दिदृक्षमाणौ वैदेहीं तद्वनं तौ विचिक्यतुः ।
तत्र तत्रावतिष्ठन्तौ सीताहरणकर्शितौ ॥ ७
लक्ष्मणस्तु महातेजाः सत्त्ववाञ्शीलवाञ्शुचिः ।
अब्रवीत्प्राञ्जलिर्वाक्यं भ्रातरं दीप्ततेजसम् ॥ ८
स्पन्दते मे दृढं बाहुरुद्विग्नमिव मे मनः ।
प्रायशश्चाप्यनिष्टानि निमित्तान्युपलक्षये ॥ ९
तस्मात्सज्जीभवार्य त्वं कुरुष्व वचनं हितम् ।
ममैव हि निमित्तानि सद्यः शंसन्ति संभ्रमम् ॥ १०
एष वञ्चुलको नाम पक्षी परमदारुणः ।
आवयोर्विजयं युद्धे शंसन्निव विनर्दति ॥ ११
तयोरन्वेषतोरेवं सर्वं तद्वनमोजसा ।
संजज्ञे विपुलः शब्दः प्रभञ्जन्निव तद्वनम् ॥ १२
संवेष्टितमिवात्यर्थं गहनं मातरिश्वना ।
वनस्य तस्य शब्दोऽभूद्दिवमापूरयन्निव ॥ १३ G 3 74 0 B 3 69 23 L 3 76 15

---

नानावर्णैश्च पुष्पैश्च (for °) N1 मत्त, G1 नानर (for मृग) Ś1 V1 D1.3 गणायुत, B1 गणाकुल, B2 समावृत, B4 -गणावृत, Dg1 D4 G1.2 M गणैर्वृत (for गणैर्युतम्) T1.2 नाना पक्षिगणैर्जुष्ट नानाव्यालमृगैर्युतम् ⊕ Cg व्यालमृगैः सर्पैः शृङ्गैश्च ⊕

7 a) Ñ2 V B1.2.4 D5.7 मार्गमाणौ (V °णा, B4 om from णौ up to 8) तु (for दिदृक्षमाणौ) —b) Ś1 D1.3 निरीक्षतु (D2 °तुः) N1 D3 विचेरतु, Dg1 Dt1 Dm1 D6.8 G M2 विचिन्वतु, T2 विचिकय च, Cg as in text (for विचिक्यतु) —After तद्वन तौ, D4 repeats erroneously from महानदी (v l for महोन्नतौ) in 5d up to तौ in 7b Ñ2 V B2 D5.7 तत्र तत्र (D5 om [hapl] one तत्र) विचेरतु, B1 भ्रातरौ तौ (marg also तत्र तत्र) विचेरतु. —c) Ñ2 V B1.3 D4.7 यत्र तत्र (V B2 यत्र) (for तत्र तत्र) Ñ1 [अ]वतिष्ठ्य, M2 [पु]नः तिष्ठतौ (for [अ]वतिष्ठन्तौ) Ś1 D1.3 तत्र तत्र विचे (D2 °चे)ष्टौ, D4 तद्वन तौ विचेष्टतौ —d) Ś1 D1.2 -कर्षितौ, Ñ1 कर्षित, Ñ2 V B1.3 Dg1 Dt1 Dm1 D5-8 T2 G M दुःखितौ (for -कर्शितौ) —After 7, V2 (mostly illeg ) ins

1255* शोकार्त ***** ********।
******** ***य शत्रुस स ।
विसृज्य वचन तस्य पक्षिराजस्य मोहित ।

—After 7, Dg1 Dt1 Dm1 D6.8 S Cv r m g k t ins a passage relegated to App I (No 17)

8 B4 om 8 (cf v l 7) —a) D2 त, D4 ता (sic) (for तु) —b) Ś1 सत्त्ववाक्, Ñ1 B1.2 Dt1 Dm1 D1.3 T2 सत्यवान्, Cg as in text (for सत्त्व°) V शीलवान्सत्त्ववान् (by transp ) —cd) M1.2 transp प्राञ्जलिर् and भ्रातर Ś1 B2.3 D1 दीनचेतस, D8 हीनचेतस (for दीप्ततेजसम्) D5 भ्रातरौ रामलक्ष्मणौ

9 a) B2 भृश (for दृढं) V1 सुदृढ, D8 प्रदृढ (for मे दृढ) —cd) Ñ2 V2 B1.2.4 D5.7 विपरीतानि पश्यामि निमित्तानि महाभुज, V1 विपरीतनिमित्तानि संपश्यामि महाभुज

10 a) D3.8 (after corr ) सज्जो भव (for सज्जीभव) Ś1 Ñ1 D1-3.8 M2 भयत्वार्य (for भवार्य त्व) —b) Dt1 D8 मम (for हितम्) Ś1 D1-3 कुरुष्व समनं महितम्, Ñ1 कुरुष्व वचन स्थिर (sic) —For 10ab, Ñ2 V B1.2.4 D5.7 subst

1256* घोररूपाणि दृश्यन्ते कुरु धीर मन स्थिरम्।

[V2 illeg for दृश्यन्ते Ñ2 V1 mostly illeg for the post half ]

—c) Ś1 Ñ V B1.2.4 D1-3.5.7 इमानि (D3 °न) Dg1 ममैव, D4 ममैव (for ममैव) B1 ते, T2 [इ]ह, M2 तु (for हि) Ś1 D3 [अ]निमित्तानि —d) Ñ1 **, B4 सद्य (for सद्य ) Dg1 Dt1 D6.8 शसति (for °सन्ति) Ś1 D2 से भय, Ñ2 V B1.2.4 D5.7 विग्रह D1 मे प्रिय, D3 मे रण, D4 विभ्रम (for संभ्रमम्)

11 D8 om 11 —a) Ñ1 Dg1 Dt1 Dm1 D1-3.7.8 T2 Ctp वञ्जुलको, V1 रञ्जनको, G2 वञ्जुलिको, Cv r m g k t as in text (for वञ्चुलको) Dt1 राम (for नाम) —Ñ1 illeg. for b —c) D4 अनयोर् (for आवयोर्) —d) Ś1 एव (for इव) G1 शसतीव (for °न्निव) Ś1 D1.3 विनर्दते, D3 च नर्दति (for विनर्दति) —For 11cd, Ñ2 V B1.2.4 D5.7 subst

1257* अपसव्य प्रयात्याशु शंसयन्तौ महद्भयम्।

[Ñ2 D5.7 शसमानो, V1 शंसते नौ (for शंसयन्तौ) B4 तुमनौ सुमहद्भयम् (for the post half) ]

12 Ñ V B1.2.4 D5.7 om 12-14 —a) D2 ययोर् (for तयोर्) D3 T1.2 G1.2 तत (G2 °यो)स्त्वन्वेषतोर् (for तयोरन्वेषतोर्) D2 रोप (sic), D4 G1 M2 एव (for एवं) —c) D8 विपुल (for °लः) D1 om (hapl ) from 12d up to शब्दो in 13c —d) D2.3 भञ्जन्निव महद्वनम्.

13 Ñ V B1.2.4 D5.7 om 13 (cf v l 12) D1 om up to शब्दो in 13c (cf v l 12) —a) Ś1 D2.3 सवेष्टयत, M2 सुवेष्टित (for संवेष्टितम्) D4 संवेष्ट्य तद्वने सर्वं —b) Dg1 D4 T2 G1.2 M1.2 Cv m गगन, Ct as in text (for गहनं) —c) M2 वनसत्त्वस्य, M3 वने स तस्य (for वनस्य तस्य) M1 वनस्य शब्दो घोरोऽभूद् —d) Dg1 D4.8 T2 G1.2 M1.2 Cv धनम्, D2 दिनम्, Cg as in text (for दिवम्), ⊕ Ct तद्वनं वनसत्त्वं मातरिश्वना संवेष्टितं व्याप्तमिव जातम्. ⊕

G 3 74 0 B 3 69 26 L 3 76 16 तं शब्दं काङ्क्षमाणस्तु रामः कक्षे सहानुजः ।
ददर्श सुमहाकायं राक्षसं विपुलोरसम् ॥ १४
आसेदतुस्ततस्तत्र तावुभौ प्रमुखे स्थितम् ।
विवृद्धमशिरोग्रीवं कबन्धमुदरेमुखम् ॥ १५
रोमभिर्निचितैस्तीक्ष्णैर्महागिरिमिवोच्छ्रितम् ।
नीलमेघनिभं रौद्रं मेघस्तनितनिःस्वनम् ॥ १६
महापक्ष्मेण पिङ्गेन विपुलेनायतेन च ।
एकेनोरसि घोरेण नयनेनाशुदर्शिना ॥ १७

महादंष्ट्रोपपन्नं तं लेलिहानं महामुखम् ।
भक्षयन्तं महाघोरानृक्षसिंहमृगद्विपान् ॥ १८
घोरौ भुजौ विकुर्वाणमुभौ योजनमायतौ ।
कराभ्यां विविधान्गृह्य ऋक्षान्पक्षिगणान्मृगान् ॥ १९
आकर्षन्तं विकर्षन्तमनेकान्मृगयूथपान् ।
स्थितमावृत्य पन्थानं तयोर्भ्रात्रोः प्रपन्नयोः ॥ २०
अथ तौ समतिक्रम्य क्रोशमात्रे ददर्शतुः ।
महान्तं दारुणं भीमं कबन्धं भुजसंवृतम् ॥ २१

14 N V B1 3 4 D5 7 om 14 (cf v l 12) —a) Ś1 D2 वीक्ष्यमाणस् (for काङ्क्षमाणस्) —b) Dg1 Dt1 D3 4 T3 सह्ये, Dm1 D3 G3 वक्ष्यौ, Cg as in text (for कक्षे) Ś1 D1 2 राम सौमित्रिणा सह —c) Ś1 सुमहावीर्यं (for °काय) —d) Ś1 D1-3 घोरदर्शनं, M1 2 विपुलोदर (for विपुलोरसम्)

15 a) Ñ1 आससेते (for आसेदतुस्) Ś1 D1-3 ततस्तस्य, Dt1 D2 च तद्वक्षस् (for ततस्तत्र) —b) Ś1 D1 2 G2 M3 स्थितौ (for °तम्) —For 15cd, Ñ2 V B1 3 4 D5 7 subst

1258* अथ तत्र महाघोरं विकृतं तं महोच्छ्रयम् ।
[V1 अत्र (for अथ) V1 च (for तं) ]

—c) V1 सशिरोग्रीव, D1 अशिरोग्रीवी (for अशिरो°) M2 विनिवृत्तशिरोग्रीव —d) Ñ1 उरसो मुख (for उदरेमुखम्)

16 a) Ś1 D1 2 लोमभिर् (for रोमभिर्) Ś1 Ñ2 V1 B1 4 D1 3 5 7 नि(V1 वि)चित, B3 निशित, Dg1 Dt1 Dm1 D6 8 T3 G1 Ct निशितैस्, Cg as in text (for °चितैस्) Ñ1 रोमभिर्वि*दाकारं —b) B4 M3 [उ]त्थित, M2 [उ]च्च (for [उ]च्छ्रितम्) Ñ1 सर्वतो - समाचितम् ※ Ct रोमभिर्निचितैस्तीक्ष्णैः इति क्वचित्पाठ ※ —After 16ab, Ñ1 ins

1259* बाला* कपिल सर्वस्तूर्णैरिव महाबलम् । (sic)

—cd) V1 illeg after नीलमेघ up to स्तनित in d Ñ2 V1 B1 3 4 D1 3 घोर (for रौद्रं) Ś1 मेघदुन्दुभि, D4 °स्वनित, D5 °स्तुनित(sic) (for °स्तनित) D3 समेघस्तनितस्वरम् (for d) —After 16, Dg1 Dt1 Dm1 D6 8 S ins

1260* अग्निज्वालानिकाशेन ललाटस्थेन दीप्यता ।

17 V1 mostly illeg for 17a —ab) Ś1 महावपेण (sic) Ñ2 V1 B1 4 D5 7 महता चाति, B3 महता भाति, D1 3 महावक्त्रेण, D2 महावक्षेण (for महापक्ष्मेण) Ś1 D1 3 नीरक्त, V1 वर्णेन, B4 घोरेण (for पिङ्गेन) M1 [आ]यसेन (for [आ]यतेन) Ñ1 मत्स्यदंष्ट्रगपि* * * * * * * * * (illeg) —c) Ñ2 V B1 3 4 D5 7 दारुण D3 रौद्रेण (for घोरेण). Ś1 D1 2 एकेनाशिरोग्रेण —d) Ś1 D2 त्रिदर्शिना, Ñ2 V B1 3 4 D2 5 7 [अ]ति(V1 B3 °भि)दर्शिना Dt1 Dm1 D6 सुदर्शिना, D8 [अ]सुदर्शिना, M3 [आ]शुदर्शिना M3 [अ]नुदर्शिना (for [आ]शुदर्शिना) Ñ1 नेत्रेणाशुदर्शिना

18 Ñ1 illeg for 18a —a) Ñ2 D5 7 तु V1 च (for तं) Ś1 D1 2 महानाद महादंष्ट्रं, D3 महादंष्ट्रं महानाद —b) Ś1 D1-3 ह्यत्यातङ्क, D4 6 M3 महन्मुख, G2 M1 मुहुर्मुख (for महामुखम्) Ñ2 V B1 3 4 D5 7 वक्त्रिन सर्व(B4 मुनि)घातिनं —c) Ś1 महारौद्र, Ñ1 D1-3 °वक्त्रं, Ñ2 V B1 3 4 D5 7 °काय (for °घोरान्) —d) Dg1 Dt1 D8 T1 2 द्विजान् (for द्विपान्) Dm1 D4 8 G1 M रुरुद्विपा(G1 °हा)न्, G3 रुरु** (for -मृगद्विपान्) Ś1 Ñ V B1 3 4 D1 5 7 घोरा नृक्षमहा(Ś1 N1 B3 D1 3 °मृग)द्विपान्(Ś1 V2 B3 °पान्) D2 घोर वृकव्याद्विपान्

19 Ñ1 om 19 —a) Ś1 D1-3 दीर्घौ (for घोरौ) Ñ2 V B1 3 4 D5 7 भुजौ दीर्घौ(Ñ2 B3 दारुणौ) (for घोरौ भुजौ) V B1 D3 विकुर्वाणौ (for °र्वाणम्) —b) Ñ2 V B1 3 4 D5 7 घोरौ (for उभौ) Ś1 D1 2 तावुभौ योजनायतौ —cd) Ś1 गृह्णन् (for गृह्य) M1 नृपान्, V1 वृक्षान् (for ऋक्षान्) M3 द्विपान् (for मृगान्) Ś1 D1 2 विविधा (D1 2 °वृन्दा)न्मृगपक्षिण (for d) Ñ2 V B1 3 4 D5 7 आदाय विविधांश्चैव करा(Ñ2 D5 7 बाहु)भ्यां मृग(V1 नृप)पक्षिण

20 Ñ1 transp 20ab and 21cd —a) D4 आकर्षन्तं (hypm) (for °र्षन्तं) Ñ2 V B1 3 4 D5 7 वना(V बलो)त्समाहृ, D4 जनेनैव (for विकर्षन्तम्) Dt1 आकर्ष* **न्तम् (om hapl) —b) D4 सुबहून् (for अनेकान्) V1 वा* -जन* * * (illeg) —After 20ab, Ñ1 ins. I 4-7 of 1264* then reads 3 66 1 and 1268* —c) V1 आमाय (for °वृत्य) G1 पथानमावृत्य (by transp) —d) Ś1 प्रसन्नयो, D3 महात्मनो (for प्रपन्नयो°) Ñ1 * * शीर्षा- वाचक (illeg) N2 V B1 3 4 D5 7 कबन्धं दारुणस्तयो.

21 Ñ1 om 21ab, —a) Dt1 Ct तं, Dm1 D4 8 तत् (for तौ) Ñ2 V B1 3 4 D5 7 समति(V1 °तु, क्रांत्) D2 3 D1 T G1 Cv m g समभिक्रम्य, D8 समति**, G L as

स महाबाहुरत्यर्थं प्रसार्य विपुलौ भुजौ ।
जग्राह सहितावेव राघवौ पीडयन्बलात् ॥ २२

खड्गिनौ दृढधन्वानौ तिग्मतेजौ महाभुजौ ।
भ्रातरौ विवशं प्राप्तौ कृष्यमाणौ महाबलौ ॥ २३ G. 3.71.23 B. 3.69.35 L. 3.76.23

in text (for °तिक्रम्य).—^b) Dt1 D2.6 Ct क्रोशमात्रः Cv.r.m.g.k as in text (for °मात्रे). D3 Ck दृढसत्तुः Cg.t as in text (archaic) (for °दृशं तु:). Ś1 क्रोशमात्रं तु पदमहम्; Ñ2 V B1.3.4 D5.7 क्रोशमात्रान्तरेण तु. —For 21^c–23, Ñ2 V B1.3.4 D5.7 subst. 1264*. Ñ1 transp. 20^ab and 21^cd.—^c) Ñ1 illeg; Dm1 भूतं; D3 रौद्रं; D4 घीरं; Cg as in text (for भीमं). —^d) Ñ1 विवृद्ध- (for कबन्ध). ℬ Cv: भुजसहृशमिति। छिन्नत्वाद्द्विपोपा भावे निष्ठान्तस्य बहुव्रीहित्वं. ℬ —After 21, Dg1 Dt1 Dm1 D1(m.).4.6.8 S ins.:

1261* कबन्धस्येव संस्थानादतिघोरप्रदर्शनम् ।

[D1 इति संस्थानम् (for इव संस्थानाद्).]

—Thereafter G1 cont., while D3 ins. 1263* after 21.

22 For subst. in Ñ2 V B1.3.4 D5.7, cf. v.l. 21 and 23. Ñ1 om. 22–23. G3 transp. 22 and 23.—^a) M1 स महाबा* * * * (damaged).—^b) G2 प्रासार्य. T2 विमलौ (for °पुलौ). M3 damaged from हौ in 22^b up to राघवौ in 22^d.—^c) Dg1 Dt1 D6 सहितावेव; G3 सुस्थितावेव; Cg as in text (for सहितावेव).—For 22, Ś1 D1–3 subst.:

1262* अघोररूपो दुष्टात्मा क्षुधार्तो जगृहेऽथ तौ ।

[D2 च तौ; D3 तत (for ऽथ तौ).]

23 Ñ1 D4 M1 om. 23 (for Ñ1, cf. v.l. 22). G2 transp. 22 and 23 and reads 23 for the second time after 1266(B)*. M2 om. 23^cd here and reads 23 (23^cd second time) after 1266(B)*.—^ab) T1 धृतधन्वानौ (for दृढ°). Dg1 तिग्मगौ वौ; T2 तिग्मचापौ; G1(first time) निस्तेजस्कौ; Ct as in text (for तिग्मतेजौ). Ś1 D1–3 M3 तिग्मचापधनुर्धरौ; G1 तेजसा भास्करोपमौ; G2(second time) तिग्मचापौ च राघवौ; K(ed.) तिग्मतेजोधनुर्धरौ (for ^b). G3 तत्रस्थौ चापनिःशिखौ तोमरौ धार्पिकाविव; M2 विक्षिप्ताभ्यां स्वबाहुभ्यां भृशं सह महावने. ℬ Cg. तिग्मं खर तेजो यस्य तत्तथा चाढवधुर्धरौ ।; Ck: तिग्म खर तेजो यस्य स तथा वाढवधुर्धरौ चेप धरा विवधः। Ct: तिग्मतेजौ तिग्मतेजसौ. ℬ —After 23^ab, Ś1 D1.2 ins., while D3 ins. after 21 and G1 cont. after 1261*:

1263* कबन्धेनातिकायेन संमूढौ दीर्घबाहुना ।

[G1 प्रमाथी (for संमूढौ).]

—^c) Ś1 D1.2 वैरिणा (D1.2 °णं); G2 सरवौ; G3 (second time) सहर्णि; M2 निरुद्धे. Cm g.k.t as in text (for विवशं). Ś1 D1.2 G2 M3 प्राप्य (for °प्तौ). D3 M2 (second time) आतातवरि(M2 °र)णं प्राप्य.—^d) D1 क्रोशमाणौ; M2(second time) गुप्य° (for कृष्य°). G2.3 M2.3 गृहदौ तु(G3 M2 both second time °तुः) (for महाबलौ).—For 21^cd–23, Ñ2 V B1.3.4 D5.7 subst., while Ś1 D1–3 G1(after 23 r.) M3 ins. after 23(M3 after 23^cd [second time]); Ñ1 ins. after 20^ab, Dm1 D6 after 1266(B)*:

1264* आवरातिकायेन गृहीतौ दीर्घबाहुना ।
परिगृह्य महावीरौ क्षुधार्तेन महाबलौ ।
कृष्यमाणौ दृढधनुर्गेहं परिघसंनिभौ ।
महागजस्याकारौ सर्वे रोमभिराचितौ ।
दीर्घतीक्ष्णकरजौ घोरौ पक्षास्याविव पन्नगौ ।
तान्यां सकृष्यमाणौ तौ खड्गबाणधनुर्धरौ ।
कृष्टेणास्य समीपं तावुपनीतौ व्यवस्थितौ ।

[Ñ1 Dm1 D6 G3 M3 om. l. 1–3. Ś1 D1–2 om. l. 1–2. —(l. 1) V1 स्थला तेन (for अतिकायेन).—(l. 2) V2 illeg. after परि. V1 B1.3.4 बलाढ्यौ (V2 °ढ्य) (for महावीरौ). V1 महाभुजौ (for °बलौ).—After l. 2, B3 ins.

1264(A)* खड्गिनौ तेजसा युक्तौ तिग्मबाणधनुर्धरौ ।

—(l. 3) B3 कृष्यमाणौ (for कृष्य°). Ś1 D1–3 वीरौ दृढधनुर्धरौ (Ś1 °धौरौ) (for the prior half).—(l. 4) Ś1 Ñ1 Dm1 D1–3.6 G3 M3 महाजगरसंकाशौ (for the prior half). Ñ1 सर्व; V1 om. (for सर्वे). Ś1 Ñ2 V B1.3 D2–3 लोमभिर् (for रोमभिर्). D5.7 आवृतौ (for आचितौ). Dm1 D6 G3 M3 सर्वरोमभिरावृतौ (for the post. half).—(l. 5) Ś1 Dm1 D1–3.6 G3 M3 तीक्ष्णरोमनखौ (D1.2 °भुजौ) बाहू; B3 दीर्घतीक्ष्णनखैर्घोरैः (for the prior half).—(l. 6) Ś1 Dm1 D1.2.6 G3 M3 तु कृष्यमाणौ; Ñ1 सुकर्षमाण (sic). B1.3 आकृष्यमाणौ; D5 विकृष्यमाणौ; D5.7 संकृष्यमाणौ (for सकृष्यमाणौ). Ñ1 V B1.3.4 Dm1 D3.6 तु (for तौ). V2 पाणि- (for -बाण-). Ś1 D2.3 बाणबाणधनुष्पाणी; Ñ1 खड्ग पातधनुष्पाणी; B3 खड्गबाणवरे तदा, Dm1 D6 G3 M3 बाणपातनिवारणौ; D1 तिग्मबाणधनुर्धरौ (for the post. half).—(l. 7) समीपस्थाव् (for °पं ताव्). Ñ1 D1.2 तस्यैवस्थाव; Dm1 D6 G3 दूरतस्तस्य; D3 तु दुरास्थास (sic); M3 स्वतस्तस्य (for [अ]स्य समीपं ताव्). Ś1 कृष्टेन तौ दूरसास्य (sic) (for the prior half). Ś1 Dm1 D1.2.6 तस्य दृष्टौ; D3 प्राप्य तस्य; G3 M3 तत्र दृष्टौ (for उपनीतौ). Ñ1 दृष्टा त* (illeg.) स्थितौ (for the post. half).]

—Thereafter Ś1 Ñ2 V B1.3.4 D1–3.5.7 cont.:

1265* स राजा स तौ वीरौ भ्रातरौ रामलक्ष्मणौ ।
प्रक्षेप्तुमास्ये बाहुभ्यामवष्टभ्य स्वतेजसा ।

[(l. 1) Ñ2 V B1.3 D5.7 हि (for स). B4 विनौ (for स तौ).—(l. 2) V2 illeg. after मास्ये. Ñ2 V1 B1(m.).3.4 D5.5.7 अवष्टभ्य (for °ष्टभ्य).]

इमं देशमनुप्राप्तौ क्षुधार्तस्येह तिष्ठतः ।
सबाणचापखड्गौ च तीक्ष्णशृङ्गाविवर्षभौ ।
ममास्यमनुसंप्राप्तौ दुर्लभं जीवितं पुनः ॥ २६
तस्य तद्वचनं श्रुत्वा कबन्धस्य दुरात्मनः ।
उवाच लक्ष्मणं रामो मुखेन परिशुष्यता ॥ २७
कृच्छ्रात्कृच्छ्रतरं प्राप्य दारुणं सत्यविक्रम ।
व्यसनं जीवितान्ताय प्राप्तमप्राप्य तां प्रियाम् ॥ २८
कालस्य सुमहद्वीर्यं सर्वभूतेषु लक्ष्मण ।
त्वां च मां च नरव्याघ्र व्यसनैः पश्य मोहितौ ।
नातिभारोऽस्ति दैवस्य सर्वभूतेषु लक्ष्मण ॥ २९
शूराश्च बलवन्तश्च कृतास्त्राश्च रणाजिरे ।
कालाभिपन्नाः सीदन्ति यथा वालुकसेतवः ॥ ३०  G. 3. 74. 32 B. 3. 69. 30 L. 3. 76. 42

26 $^{a}$) Ś1 D2 M3 वृत्तं; Ñ1 V2 वस्य; Ñ2 V1 B1.2.4 D5.7 यौ मे (for इम). B4 देशे (for देशम्). —$^{b}$) Ś1 D4.5 [इ]वः; Ñ1 B4 [अ]भि; Ñ2 V2 B1.3 D6.7 [अ]वः; V1 [अ]थ-; D2 त्रि-; Cg.k.t as in text (for [इ]ह). Ñ2 V B1.3.4 D6.7 om. 26$^{c-f}$. —$^{c}$) Ś1 D1.2 सबाणायुध-; D2 रुचिरायुध-; D4 G1 M3 सबाणचापौ; T1.2 G2 सचापबाण- (by transp.) (for सबाणचाप-). Dg1(m.) Dt1 D3.6 T3 G1 M1.2 -खड्गेन; D1 -खड्गे च; L(ed.) खड्गौ तु (for -खड्गौ च). Ñ1 बाणखड्गधनु पाणी. —$^{d}$) D3 उपस्थितौ (for इवर्षभौ). —$^{e}$) Dt1 D6 मां तूर्णम् (for ममास्यम्). G2 समनुप्राप्तौ; M3 इह संप्राप्तौ (for अनुसंप्राप्तौ). —$^{f}$) Dt1 हि वां (for पुनः). G3 om (hapl.) after जीवि in 26$^{f}$ up to जीवि in 28$^{c}$. —For 26$^{ef}$, Ś1 Ñ1 D1-3 subst. :

1269* विनदन्वाशु भाग्यास्यमात्मनो वै नयाम्यहम् ।

[Ñ1 नश्** तु (illeg.) (for विनदन्वाशु). Ñ1 भुवाभास्यम् (for ऽभाग्यास्यम्). Ś1 उभयेव (for आत्मनो वै). Ñ1 [ऽ]भिनया-म्यहं; D1 वेगयाम्यहं (for वै नया°).]

27 G3 om. 27 (cf. v.l. 26). Ñ1 reads 27$^{ab}$ twice. —$^{a}$) Ś1 D1.2 रघूत्तमः; Ñ1 नृपात्मजः; Dm1 D3 मैद्य° (for दुरात्मनः). —After 27$^{ab}$, Ś1 D1-3 ins. :

1270* आत्मानमाचचक्षेऽथ सीताहरणमेव च ।
राज्ञो दशरथस्याहं पुत्रो राम इति श्रुतः ।
पित्रा नियुक्तो वृद्धेन प्रियावचनकारिणा ।
लक्ष्मणेन सह भ्रात्रा भार्यामादाय निर्गतः ।
सा तु मे रक्षसा भार्या हृता कमललोचना ।
तामन्वेषन्सह भ्रात्रा वने पुरुषवर्जिते ।
शोकदुःखसमाक्रान्तौ बाहुमध्यं उपागतौ ।
राघवेनैवमुक्तस्तु कबन्धो दानवोत्तमः ।
श्रोभमाहारयत्वीर्य वचनं चेदमब्रवीत् ।
सभार्यस्य वने वासः सर्वथा धर्मदूषणः ।
आयुधेन च किं नार्थं व्रतिनो वनवासिनः ।
तच्छ्रुत्वा वचनं घोरं कबन्धोक्तं सुदारुणम् ।

[(l. 3) Ś1 नियुक्ते (for नियुक्तो). D2 प्रतिज्ञां परिपाल्यन् (for the post. half). —(l. 5) Ś1 D1.3 च (for तु). —(l. 6) Ś1 मन्वेष्यन्; D1 अन्विष्यन्; D3 जन्विष्य (for अन्वेषन्). —(l. 7) D1.2 -समाक्रांतौ (for °क्रान्तौ). D1 बाहुमध्ये (for °मध्य). D1.3 [आ]गतः (for °तौ). —(l. 8) D1 दैत्यसत्तम (for दानवोत्तम°). —(l. 9) D3 क्षोभम् (for क्षोभम्). —(l. 10) D3 धर्मदूषण. —(l. 11) D1 हि (for च). Ś1 चनेश्च, L(ed.) वनिनो (for व्रतिनो). D3 व्रतिनोवनवासिनो (for the post. half). —Ś1 om. l. 12 to 28$^{ab}$. —(l. 12) L(ed.) घोरसकाशं (for वचन घोर).]

—Ś1 om. 27$^{c}$–28$^{b}$. D1 om. 27$^{cd}$. —$^{d}$) D6 -शुष्यतौ (for -शुष्यता).

28 G3 om. up to जीवि in $^{c}$ (cf. v.l. 26). Ś1 om. 28$^{ab}$ (cf. v.l. 27). —$^{a}$) Ñ2 V B1.4 D5.7 प्राप्तौ; B3 Dg1 T3 प्राप्तं; D1 यस्य; D2.3 पश्य (for प्राप्य). —$^{b}$) Ñ2 V B1.3.4 D5.7 सत्यमेव तु (B4 च) (for सत्यविक्रम). —$^{c}$) G3 ***** ताताय (om.). —$^{d}$) D1-3 प्राप्यम्; D5 प्राप्तम् (for प्राप्तम्). Ñ2 V B1.3.4 D5.7 प्रियामनुपलभ्य (B3 °पश्य) तां.

29 Ñ V B1.3.4 D5.7 om. 29$^{ab}$. —$^{b}$) D3 राघव (for लक्ष्मण). T3 om. (hapl.) 29$^{cdef}$. Ñ V B1.3.4 D5.7 transp. $^{cd}$ and $^{ef}$. —$^{c}$) Dg1 reads after मां च up to $^{d}$ in marg. Ś1 Ñ V B1.3.4 D1-3.5.7 आत्मानं मां च काकुत्स्थ- (Ñ2 V B1.3.4 D5.7 सौमित्रे). —$^{d}$) Ś1 Ñ1 D1-3 व्यसने (for °सनैः). —Ś1 D1-3 om. 29$^{ef}$. —$^{e}$) Ñ1 D6 Ck.t (also) न हि; Cm.g.tp as in text (for नाति-). Ñ2 -भावोऽस्य; V1 भावोऽस्ति (for -भारोऽस्ति).

30 $^{a}$) Ś1 बलवृत्ताश्च (for °वन्तश्च). —$^{b}$) Ś1 नरा वने; Ñ1 सदा रणे; Ñ2 V B1.3.4 D5.7 नरा भुवि; Dm1 D3 G3 महारणे; D1.2 नरा रणे; D3 तथा रणे (for रणाजिरे). —Dg1 reads 30$^{cd}$ in marg. —$^{c}$) D6 G1 कालावपन्नाः (for °भिपन्नाः). —$^{d}$) Ñ1 *** (illeg.); G3 M3 सैकत- (for वालुक-). Ś1 Ñ2 V B1.3.4 D5.6.7 वालुका (Ñ2 D5.7 सैकताः; V B1.3.4 सिकता) सेतवो यथा. ... (—)]

G 3.4.32 B 3.69.51 L 3.76.45

इति नुवाणो दृढसत्यविक्रमो
महायशा दाशरथिः प्रतापवान् ।
अवेक्ष्य सौमित्रिमुदग्रविक्रमं
स्थिरा तदा स्वां मतिमात्मनाकरोत् ॥ ३१

इति श्रीरामायणे अरण्यकाण्डे पञ्चषष्टितमः सर्गः ॥ ६५ ॥

## ६६

तौ तु तत्र स्थितौ दृष्ट्वा भ्रातरौ रामलक्ष्मणौ ।
बाहुपाशपरिक्षिप्तौ कबन्धो वाक्यमब्रवीत् ॥ १
तिष्ठतः किं नु मां दृष्ट्वा क्षुधार्तं क्षत्रियर्षभौ ।
आहारार्थं तु संदिष्टौ दैवेन गतचेतसौ ॥ २
तच्छ्रुत्वा लक्ष्मणो वाक्यं प्राप्तकालं हितं तदा ।
उवाचार्तिसमापन्नो विक्रमे कृतनिश्चयः ॥ ३
त्वां च मां च पुरा तूर्णमादत्ते राक्षसाधमः ।
तस्मादसिभ्यामस्याशु बाहू छिन्दावहे गुरू ॥ ४

31 N1 om. 31. — a) Ś1 D1.3 ब्रुवाण Dg1 M3 ब्रुवाणौ (for °वाणो) Ś1 D1.3 M3 विक्रम (D3 °मे M3 °मौ) (for विक्रमो). — b) Ś1 D1.3 G1 महारथो (for °यशा) N2 V B1.3.4 D5.7 प्रतापवान्दाशरथिर्महायशः (B1 °यशा). — c) D1 आवेक्ष्य D2 आवक्ष्य (sic) (for अवेक्ष्य) D1.3 सौमित्रिर् (for °त्रिम्) Dm1 D2.4.5 G M1.2 उदार (for उदग्र) Ś1 D3 उदारविक्रम N2 V B1.3.4 D5.7 उदारदर्शन (B1 °नो) Dg1 उदारवीर्तिमान् Dt1 D6 Ct °विक्रम T1.2 पौरुष Ch °पौरुष (for उदग्रविक्रम). — d) D1 स्थितां (for स्थिरा) Ś1 D1.3 मात D4 ** (for तदा) D2 ता (for स्वां) M3 आत्मनो Ś1 D1.3 मात्ममास्तदा (D3 °था) करोत् (for °मात्मनाकरोत्) N2 V B1.3.4 D5.7 मात चकारास्य त (N2 D5.7 तु) दोर्निकृत (V2 B1.4 °कृत)न

Colophon N1 om. (Sarga cont.). — *Sarga name*: Ś1 N2 B3 D5.7 कबन्धदर्शन V1 कबन्धाकदर्शन V2 कबन्धाक ** (illeg.) B1.4 कबन्धक्रोधर D1.3 कबन्धवाक्य. — *Sarga no.* (figures, words or both): Ś1 B1.3 D3 om. N2 D5.7 6 V1 73 V2 79 B4 77 Dg1 Dt1 Dm1 D6.4 T G M1.2 69 D1 74 D4 72 M3 70. — After colophon, G concludes with श्रीरामाय नमः.

### 66

N1 continues the previous Sarga. D4 begins with ॐ, T1 with श्रीरामचन्द्राय नमः, M1 with श्रीरामाय नमः.

1 N1 reads 1 after 1164*. — a) N1 बाहुभ्यां (subm.) (for तौ तु तत्र). — c) M3 भुज (for बाहु). — d) D1 reads from अब्रवीत् up to 3a in marg.

2 D1 reads 2 in marg. (cf. v.l. 1). N1 om. 2. — a) B1 D1 तिष्ठथः B2 त्रि ष्ठौ (corrupt) B4 तिष्ठेथः D5 तिष्ठ त्व (sic) Ct विष्ठत (for तिष्ठत) Ś1 ** तु N2 V1 Dm1 D4.5.7 रक्ष तु D3 किं न (for किं नु). — c) M1 damaged from रा up to दै in 2cd. B3 [आ]धौं Dg1 [आ]धि (for [आ]र्थं) Ś1 D1.3 तु समृद्धौ N2 V B1.4 D4.7 अनुप्राप्तौ B3 भयानीतौ Dg1 T3 हि सदृशौ D1 हि सदृशौ (for तु संदिष्टौ). — d) Dt1 D4.5 हतचेतनौ D1 T2 M2.3 हतचेतसौ (D1 °सा) Cm g h गतचेतसौ (as in text) C... D1.3 मम न (D3 तद्) प्रतिजल्पथ N2 V B1.3.4 D5.7 किं मा न प्रतिजल्पथ (V °जानथ).

3 D1 reads 3a in marg. (cf. v.l. 1). — a) Ś1 D1.3 लक्ष्मण राम (for °णो वाक्यं). — b) Ś1 B1 कन्यं (for काल) D4 G1 प्रिय (for हितं) Ś1 D1.3 वच D4 T2 तथा G2 तत (for तदा). — c) Ś1 Dm1 उवाचार्य (Dm1 °थ) Dg1 D6 T2.3 G M2.3 उवाचार्ति N2 V1 B1.4 D5.7 समापन्न. — d) Ś1 D1.3 पत्रनिश्चय Dg1 Dm1 D6 T2 G2 M Cm g कृतलक्षण D1 कृतनिश्चय: D4 G1.3 कृत लक्षण N1 विक्रमे स तु लक्ष्मण.

4 a) B1 पुनस् (for पुरा) Ś1 D1.3 नूनम् (for तूर्णम्). — b) Ś1 D1.3 आदय (for आदत्त). — c) D2 तस्मात्तावस्याशु. — d) Dg1 छिन्द्यावहे K(ed.) Cm छिन्द्यावहे N1 स्यात् ; D2 लघु (for गुरू) Ś1 D1.3 बाहू छित्वा कामं यत् N2 V B1.3.4 D5.7 बाहू (D7 °हु) कृत्वा महीतले. — After 4, Dg1 Dt1 Dm1 D4.5.6 S ins.:

1271* भीषणोऽयं महाकायो राक्षसो भुजविक्रमः ।
लोकं ह्यतिजितं कृत्वा ह्यावां हन्तुमिहेच्छति ।
निश्चेष्टानां वधो राजन्कुत्सितो जगतीपतेः ।
क्रतुमध्योपनीतानां पशूनामिव राघव । [5]
एतत्संचिन्तितं श्रुत्वा तयोः क्रुद्धस्तु राक्षसः ।
विदार्यास्यं तदा रौद्रं तौ भक्षयितुमारभत् ।

G 3 75 24
D 3 71 7
L 3 78 9

श्रिया विराजितं पुत्रं दनोस्त्वं विद्धि लक्ष्मण।
इन्द्रकोपादिदं रूपं प्राप्तमेवं रणाजिरे ॥ ७
अहं हि तपसोग्रेण पितामहमतोषयम्।
दीर्घमायुः स मे प्रादात्ततो मां विभ्रमो ऽस्पृशत् ॥ ८
दीर्घमायुर्मया प्राप्तं किं मे शक्रः करिष्यति।
इत्येवं बुद्धिमास्थाय रणे शक्रमधर्षयम् ॥ ९
तस्य बाहुप्रमुक्तेन वज्रेण शतपर्वणा।
सक्थिनी च शिरश्चैव शरीरे संप्रवेशितम् ॥ १०
स मया याच्यमानः सन्नानयद्यमसादनम्।
पितामहवचः सत्यं तदस्त्विति ममाब्रवीत् ॥ ११
अनाहारः कथं शक्तो भग्नसक्थिशिरोमुखः।
वज्रेणाभिहतः कालं सुदीर्घमपि जीवितुम् ॥ १२
एवमुक्तस्तु मे शक्रो बाहू योजनमायतौ।
प्रादादास्यं च मे कुक्षौ तीक्ष्णदंष्ट्रमकल्पयत् ॥ १३
सो ऽहं भुजाभ्यां दीर्घाभ्यां समाकृष्य वनेचरान्।
सिंहद्विपमृगव्याघ्रान्भक्षयामि समन्ततः ॥ १४

7 Ś1 om $7^{abc}$ (cf v.l. 6) —a) Ñ1 श्रियाया भव्यन, Ñ2 V B1.3.4 D5.7 श्रिया(D7 °यो)मा लब्ध्यन, D1-3 श्रियाया (D2 श्रियो वै, D3 श्रियाया [sic]) प्रथम (for श्रिया विराजित) G3 श्रिया विराजित पुत्रो —b) Ñ2 D1-3 M3 दनु सा, M3 °नां (for दनोस्त्व) D1-3 राघव (for लक्ष्मण) Ñ1 V B1.3 D5.7 दनु(Ñ1 °नोर्) नाम्ना च दानव, Dm1 दनोर्विद्धि सलक्ष्मण, G3 M1 दनोस्तु विभ(M3 °नां विपु)लेक्षण ॥ Cm श्रिय श्रिया विराजित दनो पुत्र विद्धि। यद्वा दनोर्दनुसंज्ञकस्य श्रिय श्रीनाम्न पुत्र विद्धि मामिति शेष। "दनुनाम श्रिय पुत्र शापाद्राक्षसता गत" इति किष्किन्धाकाण्डे वक्ष्यमाणत्वात्। Ct नष्ट स्व विपुलमुक्तन श्रिया विराजित रूप प्राप्स्यस इति तेन नाभिविहित सम्बन्ध। एवञ्च मा दनो पुत्र विद्धीत्यन्वय। "श्रिया विराजित पुत्र दनु स्त्व विद्धि लक्ष्मण" इति पाठान्तर वदा श्रिया श्रीनाम्नो दानवस्य पुत्र दनुनामानमित्यर्थ ॥ —c) Dm1 शापाद् G2 शोकाद् (sic) (for -कोपाद्) D1.2 प्राप्त, D7 om (for रूप) Ñ1 इन्द्रकोपाद्विरूप मे, D5 इक्ष्वाको यदिद रूप —d) D1.2 रूपम् (for प्राप्तम्) Ñ1 M3 पुनर्, Dm1 D2 G1.2 पुन (for एव) Ñ2 B3.4 D5.7 प्राप्त (B3 °म)स्तमयद्धि च, V1 प्राप्त वैराग्यमन्यता, V2 B1 प्राप्त तु मम विद्धि च(B1 तत्), D6 प्राप्तमेव रणे मया (sic) Cv cites as in text for $^{cd}$

8 a) Ś1 च, L(ed.) प्राक् (for हि) —d) M3 यदा (for ततो) D1.2 मे (for मां). Ñ2 V B1.3.4 D5.7 ततोऽहं पूर्णमानस

9 a) B3 यदा (for मया) M1 damaged for र्घमायुर्म. —b) Dt1 D6 मा (for मे) D1 यम (for शक्र) —c) Ś1 Ñ V B1.3.4 D1.3.4.5 [इ]त्थ, (for [इ]त्थं) M3 आदाय (for आस्थाय) —d) V1 अतोषयम् (for अधर्षयम्)

10 a) D2 reads बाहुप्र in marg. Ś1 Ñ2 V2 D6.7 Dm1 प्रसु(Ś1 °स)प्तेन (for प्रमु°) —b) Ñ1 वज्रपाणि इतस्य म —c) Ś1 Ñ1 D1.2 सक्थीनि, B1(marg. also) सक्थिनी Dt1 Dm1 D6 (marg. gloss कटिदेश) सक्थीनि (for सक्थिनी) Ś1 Ñ2 V B1.3.4 D1.3.4.7 म, Ñ1 om. (subm.) (for च). L(ed.) [च]ैव सूपा च (for शिरश्चैव) —d) Ñ1 म प्रवेशिता Ñ2 सवि°; V B1.3 D5 सन्ध्यैवेशयत्, D3 मे निवेशित, Dm1 D4.5 G1 °विशे, M1 °शिते (for सप्रवेशितम्) ॥ Cm शतपर्व सहस्रपर्वा। सक्थिनी इति साम्यधोभागलक्षणम्। ॥

11 a) Ñ2 V B1.3.4 D5.7 तु(V1 च) मा (for मया), Ś1 Ñ2 V B1.3.4 D1-3.5.7 G1 Cm t याच्यमानोऽपि(G1 °नो मा), T1 याच° (sic), G2 प्रार्थ्यमान सन् (for याच्यमान सन्) Ñ1 स याच्यमानो मामेव —b) D6 यमसादने —c) Ñ1 D5 श्रुत्वा, Ñ2 V B1.3.4 D5.7 तथ्य (for सत्य) —Ñ1 illeg. for d. —d) Ś1 D1-3 अस्त्विति, V1.2 Dg1 तदा°, G2 तथा°, M3 तथा°, Ct as in text (for तदस्त्विति) Ś1 Ñ2 V B1.3.4 D1-3.5.7 स सो(Ś1 मे, B1 मा) (for मम) —After 11, Ñ2 V B1.3.4 D5.7 ins.

1250* एवभूतेव तु मया निरस्तेनाल्पतेजसा।
इदमुक्त सुरपतिर्मूर्ध्नि कृत्वा तदाञ्जलिम्॥

[(l. 1) B3 D5.7 [अ]न्त्यजसा —(l. 2) B3 तेनेदं, G(ed.) [अ]ञ्जलि तदा (by transp.) (for तदा ञ्ज)]

12 a) Ś1 शक्र, G(ed.) शक्ये (for शक्तो) —b) Dg1 T अग्रसक्थ, D1 °अग्नि (sic), D6 °ग्नसिर (sic), M1 °* (damaged) सिप (for भग्नसक्थि). B3 शिरोधर Dg1 D3 °रुह, T °रुक (for शिरोमुख) ॥ Ck भग्न सक्थिनी शिरोधरा च यस्य स तथा ॥ —c) Ñ V D1 Dm1 D4.5 G1 Cm t वज्रिणा (for वज्रेण) D4 G3 [अ]भिहत D6 हि हत (for [अ]भिह°) Ñ1 सर्वं, V1 काल (for काल) —D6 reads from सक्थि in $12^{d}$ up to $14^{a}$ in marg. —d) Ñ1 मुहूर्तम् (for सुदीर्घम्). D5 इमा D6 इह, L(ed.) उप (for अपि).

13 D6 reads 13 in marg. (cf. v.l. 12) —a) Ñ1 स मे, Ñ2 V B1.3.4 D5.7 मया (for तु मे) D1 D6 स शक्र मुक्त बाहू मे —c) M1 इदान् (for प्रादात्) Dt1 D6 दत्वा(D6 *)स्यं Ś1 Ñ V B1.3.4 D1-3.5.7 प्रादाद्वक्त्रं च मे(Ś1 च, D3 वै), Dg1 प्रददौ विपुल वक्त्र —d) V1 नाडि चरम् (for ष्ट्रमदधम्) Ś1 D1-3 अयाकरे(D3 °कं) Ñ2 V B1.3.4 D5.7 इदं महत् (for अकल्पयत्)

14 D6 reads $14^{a}$ in marg. (cf. v.l. 12). —b) Ś1 D1-3 समुद्धोलिन्, Ñ V B1.3.4 Dg1 Dt1 D1-7 T1 G1.2

स तु मामब्रवीदिन्द्रो यदा रामः सलक्ष्मणः ।
छेत्स्यते समरे बाहू तदा स्वर्गं गमिष्यसि ॥ १५
स त्वं रामोऽसि भद्रं ते नाहमन्येन राघव ।
शक्यो हन्तुं यथातत्त्वमेवमुक्तं महर्षिणा ॥ १६
अहं हि मतिसाचिव्यं करिष्यामि नरर्षभ ।
मित्रं चैवोपदेक्ष्यामि युवाभ्यां संस्कृतोऽग्निना ॥ १७
एवमुक्तस्तु धर्मात्मा दनुना तेन राघवः ।
इदं जगाद वचनं लक्ष्मणस्योपशृण्वतः ॥ १८
रावणेन हृता सीता मम भार्या यशस्विनी ।
निष्क्रान्तस्य जनस्थानात्सह भ्रात्रा यथासुखम् ॥ १९
नाममात्रं तु जानामि न रूपं तस्य रक्षसः ।
निवासं वा प्रभावं वा वयं तस्य न विद्महे ॥ २०
शोकार्तानामनाथानामेवं विपरिधावताम् । G 3 75 40
कारुण्यं सदृशं कर्तुमुपकारे च वर्तताम् ॥ २१ B 3 75 26 L 3 73 18

M2 3 स(Ñ2 V B1 3 4 D5 7 आ)कृष्य(Dt1 D4 °क्षिप्या)-हिमद् (for समाकृष्य) Ś1 Ñ V B1 3 4 D1-3 6 7 महा(Ñ1 * न[illeg ])वने(B3 °न) G1 वने चरन् (for वनेचरान्) ◊ Cg सहृत्य आकृष्य ◊ —c) Ñ1 मृगान्व्याल, Dg1 Dt1 D1-4 6 T1 G M1 सिंहद्वीप (D1 2 4 6 T1 °पि) Dm1 D8 सिंहान्द्विप (for सिंहद्विप) Ñ1 मृग[illeg] (illeg) Dt1 -नर°, D3 मृगान्व्यालान्, G(ed) मृगान्भान् (for मृगव्याघ्रान्) Ñ2 V B2 3 4 D5 7 शार्दूलव्याघ्रान्मृगान्व्यालान्

15 D1 om 15 17 Ś1 D3 om 15–16 D4 om 15 —a) Ñ2 V B1 3 4 D5 7 च (for तु) —b) Ñ1 यदा वै राघवौ वने, Ñ2 V B1 3 4 D5 7 यदा त्वं रामलक्ष्मणौ —c) Ñ1 V B1 3 4 D5 7 छेत्स्यत, D3 छास्यते, G1 छेत्स्य (for छेत्स्यते) Ñ1 युवां छेत्स्यति ते बाहू —After 15 Dg1 Dt1 Dm1 D4 6 8 S ins

1281* अनेन वपुषा तात वनेऽस्मिन्राक्षसोत्तम ।
यदा पश्यामि सततं ग्रहणं प्राणु रोचये ।
अवश्यं ग्रहणं रामो मन्येऽहं समुपैष्यति ।
इमां बुद्धिं पुरस्कृत्य देहन्यासकृतश्रम ।

[(l 1) M2 वपुषः (for वपुषा) K(ed) प्राप (for तात) —G2 damaged from सतु in l 2 up to अवश्य in l 3 —(l 3) Dm1 D8 T1 2 G M समुपेष्य(G1 °ष्य)ति (D8 °ति) D4 समुपैष्यति ]

16 Ś1 D1 2 om 16 (cf v l 15) D4 om 16–17b —a) B3 सत्य (for स त्व) —b) Ñ2 V B1 2 4 D5 7 कथंचित् (for राघव) —G2 damaged from 16c up to ना in 18d —c) M2 शक्तो (for शक्यो) V1 तथा, D3 तदा (for यथा) Ñ1 B1 D5 7 हन्तुं, V B1 2 D3 -वास्यम् (for -तत्त्वम्) —d) Ñ1 V2 B1 2 Dg1 Dm1 D2 8 G1 2 M एतदुक्त, Ñ1 B4 D5 7 प्रोक्तो वाक्य, V1 जहमुक्तो, Ck एव मुक्त, Cg as in text (for एवमुक्त) Ñ1 मया प्रभो, G(ed) दिवौकसा (for महर्षिणा)

17 D1 om 17 (cf v l 15) D4 om 17ab G2 damaged for 17 (for both cf v l 16) —a) Ś1 D1 2 इत्थ (for अहं) Ś1 Ñ2 V B1 3 4 D5 7 वाम्, Ñ1 D3 त (for हि) Ś1 Ñ Ñ2 B1 3 4 D5 7 मति(Ñ1 मति) साहाय्य (Ś1 °च्य) (for मतिसाचिव्य) —b) Ś1 Ñ2 V B1 4 D5 7 नरर्षभौ, Ñ1 न सशय (for नरर्षभ) —c) Ś1 D1 2 हित (for मित्र) Ñ2 (with hiatus) ते उपदेक्ष्यामि (for चैवोप°) —d) Ñ1 त्वयाह, G1 2 M1 (with hiatus) उभाभ्या M2 damaged (for युवाभ्या) Ś1 D3 सत्कृतौ (for संस्कृतो) Ñ1 V B2 3 4 D5 7 भवतोरश्निवास्मिं ◊ Cm सम्यग्दाहोत्तर बुद्धिसाहाय्य करिष्यामि मित्र चापि देक्ष्यामि ◊

18 G1 damaged up to दनुना in 18b (cf v l 16) D6 reads 18–19b in marg —ab) Ñ2 V B1 2 4 D5 7 transp धर्मात्मा and दनुना Ś1 D1-3 रामस्तदा (for तेन राघव) G2 गतवत स राघव (for b) —D4 om 18c —d) Dg1 [प]ुत्र शृण्वत, Dt1 D6 च पश्यत (for [उ प] शृण्वत ]

19 D6 reads 19ab in marg (cf v l 18) —ab) B4 सीता (for मम) Ś1 Ñ1 D1-3 पत्नी, B4 मम (for भार्या) —T1 2 transp सीता and भार्या Dt1 Dm1 D4 8 G1 भार्या सीता मम (by transp) —d) V2 om यथा Ñ2 स्वय (for सुखम्) —After 19 V1 D6 ins

1282* पुत्रमात्स्थाय नौ पत्नी गत स्वर्गं न संशय ।
[D4 एतद् (for एवम्) and मे (for नौ) ]

20 a) B4 च (for तु) —G1 damaged for 20b —b) V1 रूप तस्य न (by transp) —After 20ab Ñ1 V1 B1 D5 7 read 23 —Ñ2 V1 B1 D5 7 om 20cd —c) Dg1 च (for वा) Ś1 Ñ1 V2 प्र(V2 मु)वास वा, B4 प्रभावस्य, D1 प्रकाश वा (for प्रभाव वा) —d) Dg1 इय (for वय) Ś1 V2 D1 2 न वय तस्य (by transp) Ñ1 न विप्रवस्य रक्षस, B2 सत्त्वस्य इति वा नय —After 20 V2 B3 4 read 23

21 a) Ś1 V1 D1-3 च, Ñ2 V B1 2 4 D5 7 न, M1 हि (for वि) —Ñ2 V B2 4 D5 7 om 21c–22 —c) B1 कारुण्यात्, Dg1 D1 °ण्य, D1 शोभन (for कारुण्य) V1 वक्तुम् (for कर्तुम्) —d) Ś1 Dt1 Dm1 D1 2 4 6 G2 Cr t उपकारेण, Dg1 °रणु (for °रे च) G1 वर्तिनं (for वर्तताम्) ◊ Cm उचित कारुण्य कर्तुं वक्तासमाक सीता मार्गणे ।, Ck उपकारेण परोपकारेण प्रवर्तया प्रवर्तमानानाम स्माकम् ◊

G 3.75.0 B. 3.71.24 L. 3.73.19 काष्ठान्यानीय शुष्काणि काले भग्नानि कुञ्जरैः ।
धक्ष्यामस्त्वां वयं वीर श्वभ्रे महति कल्पिते ॥ २२
स त्वं सीतां समाचक्ष्व येन वा यत्र वा हृता ।
कुरु कल्याणमत्यर्थं यदि जानासि तत्त्वतः ॥ २३
एवमुक्तस्तु रामेण वाक्यं दनुरनुत्तमम् ।
प्रोवाच कुशलो वक्तुं वक्तारमपि राघवम् ॥ २४
दिव्यमस्ति न मे ज्ञानं नाभिजानामि मैथिलीम् ।
यस्तां ज्ञास्यति तं वक्ष्ये दग्धः स्वं रूपमास्थितः ॥ २५
अदग्धस्य हि विज्ञातुं शक्तिरस्ति न मे प्रभो ।
राक्षसं तं महावीर्यं सीता येन हृता तव ॥ २६
विज्ञानं हि महद्भ्रष्टं शापदोषेण राघव ।
स्वकृतेन मया प्राप्तं रूपं लोकविगर्हितम् ॥ २७
किं तु यावन्न यात्यस्तं सविता श्रान्तवाहनः ।
तावन्मामवटे क्षिप्त्वा दह राम यथाविधि ॥ २८
दग्धस्त्वयाहमवटे न्यायेन रघुनन्दन ।
वक्ष्यामि तमहं वीर यस्तं ज्ञास्यति राक्षसम् ॥ २९
तेन सख्यं च कर्तव्यं न्याय्यवृत्तेन राघव ।
कल्पयिष्यति ते प्रीतः साहाय्यं लघुविक्रमः ॥ ३०

22 Ñ2 V B3.4 D5.7 om. 22 (cf. v.l. 21). —ab) Ś1 B1 D1.2 T1.2 G3 M3 [आ]दाय (for [आ]नीय). B1 गत्वाथ (for शुष्काणि). Ś1 D1-3 स(D1.2 प)[द्वि]भिन्नानि (for काले भग्नानि). Ñ1 D5 D11 D6 T3 M1 transp. शुष्काणि and भग्नानि. —c) Ś1 D1.2.8 G3 धक्ष्यावस्; D1 M3 °मि (for °मस्). D11 om. for वयं वीर. Ś1 च वा (sic). D4 अहं (for वयं). B1 marg. for वीर. —d) D1 शुभे, D6(marg. also) कक्षे (for श्वभ्रे). Ś1 कानने, Ñ1 कन्दरे, B1 कल्पयन् (for कल्पिते).

23 Ñ2 V1 B1 D5.7 read 23 after 20ab, while V3 B3.4 read 23 after 20. —a) V2 D11 G3 समाचक्ष्व. —b) Ś1 Ñ1 V B1.2.4 D1-3(marg.) transp. येन and यत्र. V1 वाहिता, G2 चा° (for वा हृता). —c) Ñ2 D4 सख्य त्वं. D3 अन्यथो (for अत्यर्थं). Ś1 D1.2 कुरु कार्यं मम(D2 °र्यंमथा)न्यथो.

24 b) Ś1 D1.2 च(D1 यत्) तद् (for दनुर्). Ñ2 V B1.3.4 D5.7 वाक्य तद्(B3 °स्व)मुतोपमं, G2 दानवो वाक्य मुत्तमं; G(ed.) वाक्य मधुरक्षरं. —c) Ś1 वचनं, Ñ1 Dm1 D1.2.3 G2 कुशलं, B3 कुशली (for कुशलो). Ś1 व्यक्त, Ñ2 D11 D6 Ct वक्ता, V2 D1.3 वाक्य, D2 (s°) वक्तृ, Cg as in text (for वक्तुं). —d) Ś1 D4 M1 इति (for अपि).

25 a) Ś1 D1-3 न हि, Ñ2 V B1 D5.7 नापि, B4 नाह (for नास्ति). —c) Ś1 न वा (for यस्तां). Ś1 ज्ञास्यामि, B1 °ति, D11 D4 वक्ष्यति (for ज्ञास्यति). Ś1 Ñ V B1.2.4 D1-3.7 त Ś1 वा [sic]) ज्ञास्ये. V1 वक्ष्ये त(by transp.) (for त वक्ष्ये). —B3 reads 25d-26b in marg. —d) Ś1 D1.2 स्व (for स्वं). —After 25, D11 D6 ins.:

1283* योऽभिजानाति वक्ष्यस्वद्रूपे राम तत्परम् ।

26 B3 reads 26ab in marg. (cf. v.l. 25). —a) G(ed.) मेऽदग्धस्य (for अद°). Ś1 Dg1 D1-3.8 T1 G1 M1 तु, Ñ1 V B1.2.4 D5.7 G2 न (for हि). Ś1 D2 विज्ञाने(D2 °नं), Ñ2 V1 T1 मे(T1 स) ज्ञातु (for विज्ञातुं). —b) Ś1 नास्ति (for अस्ति). Ś1 D1.3 न मे विभो, Ñ1 मम प्रभो; V2 B1.4 D5.7 मद्यैसौ (for न मे प्रभो). —c) Ñ2 Dg1 D11 Dm1 D6.8 T1 M1 तु, B4 च (for तं). Ñ1 राक्षस स महावीर्यं. —d) Ñ2 V B1.2.4 D5.7 G2 transp. सीता and येन. D1 [आ]हृता (for हृता). Ñ2 V B1 D5.7 दहन्, D4 चेनं, D2 तथा (for तव). B4 बलाद्धृता.

27 V1 om. 27ab. —a) Ś1 Ñ1 D1-3 मे (for हि). Ś1 Ñ1 D1-3 परिभ्रष्टं, Ñ2 V2 B1.2.4 Dg1 Dm1 D5.7.8 G M1 मम नष्टं (for महद्भ्रष्टं). —Ś1 om. 27bc. B1 reads 27cd in marg. —c) Ñ1 स्वदोषेण, V1 दु°, B1 लङ्कृ°, D1.2 दुष्कृ° (for स्वकृतेन). B1 यथा (for मया). Ñ2 V B1.2.4 D5.7 प्राप्तो (for प्राप्तं). —d) Ñ2 V B1.2.4 D5.7 घोरं लोकविगर्हितं.

28 a) D4 वा यावन्(hypm.) (for यावन्). —c) D-(gloss) गर्ते (for अवटे). Ś1 Ñ2 V B1.2.4 D1.3.7 कृत्वा (for क्षिप्त्वा). —d) Ñ1 वीर (for राम). Ñ1 यथाक्रमं (for °विधि).

29 Dm1 reads 29ab except दग्ध in marg. —a) Ñ1 विद्वांस्तं (for त्वयाहम्). Ñ2 V B1.4 D5.7 न्यायेन, B1 रामेण (for अवटे). —b) Ñ1 न्यायात्, Ñ2 V B2.3.4 D5.7 तथोचित्(D1 °ह, B3 °स्य) (for न्यायेन). Ś1 D1-3 रावणं दिव काम्यया. —c) Ñ2 V1 D11 Dm1 D5.7 त्वां(D11 D5.7 ते) महा, B1.4 त्वामहं, M3 [इ]दं तु त (for तमहं). —d) Ñ2 V B1.2.4 D5.7 त वक्ष्यति, Dg1 T1 तं ज्ञा°, D11 D1 G1 वैत्स्यति (for त ज्ञास्यति). Ś1 V1 D2 रावणं, Ñ2 D5.7 रावणं (for राक्षसम्).

30 a) L(ed.) येन. —b) Cg L न्याय्य (for न्याय्य). —Ś1 om. (hapl.) 30c-31a. —c) Ñ1 G2 प्रीति, Dg1 D11 T3 वीर, D2 प्राह (for प्रीतः). Ñ2 V B1.2.4 D5.7 कल्पयिष्यति स ते वीर. —d) D1.2.4 T1 G1 -विक्रम (for °मः). Ñ2 V B3.4 D5.7 सा( V3 B3 स )हाय्य( V2 °य्यं, B1 °य्यं ), मर्दनं, B1 साहाय्यकामर्दनं.

न हि तस्यास्त्वविज्ञातं त्रिषु लोकेषु राघव । | समन्तात्परिसृतो लोकानुरा वै कारणान्तरे ॥ ३१

इति श्रीरामायणे अरण्यकाण्डे सप्तषष्टितमः सर्गः ॥ ६७ ॥

## ६८

एवमुक्तौ तु तौ वीरौ कबन्धेन नरेश्वरौ ।
गिरिप्रदरमासाद्य पावकं विससर्जतुः ॥ १
लक्ष्मणस्तु महोल्काभिर्ज्वलिताभिः समन्ततः ।
चितामादीपयामास सा प्रजज्वाल सर्वतः ॥ २
तच्छरीरं कबन्धस्य घृतपिण्डोपमं महत् ।
मेदसा पच्यमानस्य मन्दं दहति पावकः ॥ ३ G 3 75 51 B 3 72 3 L 3 78 32

31 Ś1 om 31[ab] (cf v.l. 30) —[a]) Ñ V B1.4 D1-3.5.7 G2 [अ]विदित, Dg1 M1 °ज्ञात (for [अ]विज्ञात) B1 न ह्यस्त्यविदित तस्य —[c]) Ñ Dt1 D4 T1.3 परिवृतो, V1 व्याप°, D1 °सृतान्, D2 °भृतान्, I2 प्रवि° (for परिसृतो) Ś1 Ñ V B1.3.4 D1-3.5.7 देशान् (for लोकान्) —[d]) Ś1 Ñ V B1.3.4 Dg1 D1-3.6.7 स बली (Dg1 तु वै) T1.2 Ck पुराणौ (for पुरा वै) Ñ1 कारणादिति, D1.2 कर° (for कारणान्तरे) —After 31, Ś1 D1-3 ins

1284* तस्मिन्निशाक्षिक मित्र कृत्वा सीतामवाप्स्यसि ।

[ D1 उव् (for तम्) Ś1 D3 अवाप्स्यथ (D3 °थ) ]

while M2.3 ins

1285* महाबलस्त्वमितगतिर्महामना
दृढव्रतो मधुरकथ प्रतापवान् ।
समागतो वनरूपभेण धीमता
महात्मना जनकसुतामवाप्स्यसि ।

[ (l 1) M3 महात्मना —(l 3) M3 वानर्षभेण ]

Colophon Ś1 Ñ V1 B1.4 D1.2.4.6.7 om —*Kanda name* V2 B3 Dg1 Dt1 D5.6 T G M1.2 आरण्य (V2 °वध्य) काण्डे —*Sarga name* V2 B3 D3 कबन्धवाक्य —*Sarga no* (figures, words or both) B1 om, V3 81, Dg1 Dt1 Dm1 D5.6 T G M1.2 71, D4 80, M3 72 —After colophon G concludes with श्रीरामाय नम.

## 68

Ś1 Ñ V1 B1.4 D1.2.4.6.7 continue the previous Sarga. D3 begins with ॐ, T1 with श्रीरामचन्द्राय नम, M1 with श्रीरामाय नम

1 [a]) B1 lacuna for तौ Ñ1 तेन (for वीरौ) —[b]) Ś1 D1-3 M3 नरोत्तमौ (for नरेश्वरौ). Ñ2 V B1.3.4 D5.7 तेनार्थे (B1 कृतार्थौ) रामलक्ष्मणौ. —[cd]) T1.2 प्रदरम् (for प्रदरम्) Ś1 D1-3 गिरिप्रतिममादीप्य (for [c]) Ñ2 V B1.3.4 D5.7 गिरिप्रस्तरमारोप्य कबन्धं समुपैयतु —After 1, Ś1 Ñ2 V B1.3.4 D1-3.5.7 ins

1286* काष्ठनिर्मथनादग्निं ज्वलयित्वा महाबलौ ।
कबन्धमवटे कृत्वा चक्रतुस्तौ चितां तत्र ।

[ (l 1) Ś1 D1-3 -मजननाद्, B1 D7 निर्मथनाद् (for निर्मथनाद्) B3 ज्वालयित्वा (for ज्वलयित्वा) —(l 2) Ś1 D1.2 काष्ठेश्चकुस्, D3 काष्ठै कृत्वा (for चक्रतुस्तौ) ]

while G1 M3 (*inf lin sec m*) ins after 1

1287* न्यायेन कृत्वा महतीं चितां गिरिगुहोपमाम् ।
तत कबन्धमारोप्य चितां ज्वलिततनौ ।
बाहू च सुमहाबाहुर्येनितापवधस्थितौ ।

[ (l 1) M3 गिरिविरोपमां (for °गुहोपमाम्) —(l 3) M3 स्थितान् (for °तौ) ]

2 [a]) D3 दह्यमानो (for लक्ष्मणस्तु) —V1 om (hapl ?) 2[cd] —[c]) T1 चितिम् (for चिताम्) Ś1 प्रदीपयामास, M1 भारो° (for मादी°) —[d]) B4 स (for सा) G2 सर्वदा (for °त ) Ñ1 V2 B1.3 प्रजज्वाल च सर्वदा (Ñ1 सार्चिषा, V2 सर्वत ) D1 प्रजज्वाल समन्तत —After 2, G1 M3 (*inf lin sec m*) ins.

1288* तां प्रेक्ष्य सर्वतो दीप्तां चितां दृढधनुर्धरः ।
उत्तममसौ दृढ वाक्य राघव लक्ष्मणोऽब्रवीत् ।
दग्धो जटायु पूर्वं तु सीतामन्वेषता त्वया ।
अय द्वितीयो निर्दग्धस्तुष्टाय किं नु धक्ष्यसि ।
महाशिरसरमस्य कबन्धमनसो महान् । [5]
अन्तरिक्ष महोल्काभिरातृणोत्स सहस्रशः ।

[ (l 2) M3 रामे वा (for राघव) —(l 3) M3 पूर्वस (for पूर्वं) —(l 5) M3 [ऽ]शरव (for महान्) ]

3 [b]) B1 मृत, D3 धरा (for घृत ) G1 शुभ (for महत्) —[c]) Ñ2 V B1.3.4 D5.7 मेदस, Cm g t as in text (for °सा) Ś1 D1.2 सिध्यमानस्तु, Dm1 पच्यमानस्य (for पच्यमानस्य) —[d]) Dt1 D5.6 Ct दहत (archaic) (for °ति) Ñ1 ददाहाग्नि शनै शनै

